श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रीकूरनारायणस्वामि विरचितम्

# ॥ श्रीनारायणाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

# ॥ श्रीनारायणाष्टकम् ॥

वात्सल्यात् अभयप्रदान समयात् आर्तार्ति निर्वापणात्
औदार्यात् अघशोषणात् अगणित श्रेयः पदप्रापणात्।
सेव्यः श्रीपतिरेक एव जगतामेतेऽभवन्साक्षिणः
प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः॥ १ ॥

प्रह्लादास्ति यदीश्वरो वद हरिः सर्वत्र मे दर्शय
स्तम्भे चैवमिति ब्रुवन्तमसुरं तत्राविरासीद्धरिः।
वक्षस्तस्य विदारयन्निजनखैर्वात्सल्यमापादयन्
आर्तत्राणपरायणः स भगवान् नारायणो मे गतिः॥ २ ॥

श्रीरामोऽत्र विभीषणोऽयमनघो रक्षोभयादागतः
सुग्रीवानय पालयैनमधुना पौलस्त्यमेवागतम्।
इत्युक्त्वाऽभयमस्य सर्वविदितं यो राघवो दत्तवान्
आर्तत्राणपरायणः स भगवान् नारायणो मे गतिः॥ ३ ॥

नक्रग्रस्तपदं समुद्धृतकरं ब्रह्मादयो भोस्सुराः
रक्षन्तामिति दीनवाक्यकरिणं देवेष्वशक्तेषु यः।
माभैषीरिति तस्य नक्रहनने चक्रायुधः श्रीधरो
ह्यार्तत्राणपरायणः स भगवान् नारायणो मे गतिः॥ ४ ॥

भोः कृष्णाच्युत भोः कृपालय हरे भोः पाण्डवानां सखे
क्वासि क्वासि सुयोधनाद्यपहृतां भो रक्ष मामातुराम्।
इत्युक्तोऽक्षयवस्त्रसम्भृततनुं योऽपालयत् द्रौपदीं
आर्तत्राणपरायणः स भगवान् नारायणो मे गतिः॥ ५ ॥

यत्पादाब्जनखोदकं त्रिजगतां पापौघविध्वंसनं
यन्नामामृतपूरकं च पिबतां संसारसन्तारकम्।

पाषाणोऽपि यदङ्घ्रिपद्मरजसा शापान्मुनेर्मोचितो
ह्यार्तत्राणपरायणः स भगवान् नारायणो मे गतिः॥ ६ ॥

पित्रा भ्रातरमुत्तमासनगतं ह्यौत्तानपादि ध्रुवो
दृष्ट्वा तत्सममारुरुक्षुरधिकं मात्राऽवमानं गतः।
यं गत्वा शरणं यदाप तपसा हेमाद्रि सिंहासनं
ह्यार्तत्राणपरायणः स भगवान् नारायणो मे गतिः॥ ७ ॥

कवेरी ह्रदयाभिराम पुळिने पुण्ये जगन्मङ्गळे
चन्द्राम्भोजवतीतटे परिसरे धात्रा समाराधिते।
श्रीरङ्गे भुजगेन्द्रभोगशयने शेते सदा यः पुमान्
आर्तत्राणपरायणः स भगवान् नारायणो मे गतिः॥ ८ ॥

आर्ता विषण्णाः शिथिलाश्च भीताः
घोरेषु च व्याधिषु वर्तमानाः।
सङ्कीर्त्य नारायण शब्दमात्रं
विमुक्तदुःखाः सुखिनो भवन्ति॥ ९ ॥

॥ इति श्रीनारायणाष्टकम् समाप्तम्॥